❀ श्रीः ❀

# समासचक्रम्

सम्पादकः—

श्रीकनकलालशर्मठक्कुरः

संशोधकः—

...र अभिमन्युः, एम० ए०



...काशकः—

...ाड़ीलाल ऐण्ड सन्स

संस्कृत बुकडिपो,

कचौड़ीगली, बनारस-१

-)20

मूल्यम् =)॥

NA

श्रीगणेशाय नमः।

# अथ समासचक्रप्रारम्भः।

षोढा समासाः संक्षेपादष्टाविंशतिधा पुनः।
नित्याऽनित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥१॥
तत्राऽष्टधा तत्पुरुषः, सप्तधा कर्मधारयः।
सप्तधा च बहुव्रीहिर्द्विगुराभाषितो द्विधा ॥२॥
द्वन्द्वोऽपि द्विविधो ज्ञेयोऽव्ययीभावो द्विधा मतः।
तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् ॥३॥
चकारबहुलो द्वन्द्वः स चाऽसौ कर्मधारयः।
यस्य येषां बहुव्रीहिः शेषस्तत्पुरुषः स्मृतः ॥४॥
कर्तृकर्मक्रियायुक्तः प्रयोगः स्यात् सकर्मकः।
अकर्मकः कर्मशून्यः कर्मद्वन्द्वो द्विकर्मकः ॥५॥

अथ बालबोधार्थं प्रयोगविधिः कथ्यते ॥

प्रयोगाः पञ्चविधाः। सकर्मकोऽकर्मकः, कर्मणि, भावे द्विकर्मकश्चेति भेदात् ॥

[१] सकर्मकप्रयोगो यथा—कृष्णो भक्तान् रक्षति।






भो भोः शब्दशास्त्रप्रवेष्टुकामाः अल्पमतयो बटुस्वरूपाश्छात्रवृन्दा ! विदाङ्कुर्वन्तु भवन्तो यत् एष समासचक्रनामग्रन्थो लघुकौमुदीप्रभृत्यल्पग्रन्थाध्येतॄणां छात्राणामत्युपयोगी वरीवर्त्ति । अस्मिंश्च ग्रन्थे सकलसमासानां कारकाणां च भेदाः सोदाहरणाः सम्यक् दर्शिताः सन्ति । कुत्रचिदुपयुक्तटिप्पण्यादिरप्यस्ति । ग्रन्थस्य चाऽस्योपयोगिताऽनुपयोगिता वाऽवलोकनेनैव ज्ञास्यते । इत्यलम् ।

—श्रीकनकलालठक्कुरः ।

[ २ ] अकर्मकप्रयोगो यथा—कृष्णस्तिष्ठति ।
[ ३ ] कर्मणि प्रयोगो यथा—विष्णुना प्रपञ्चः क्रियते ।
[ ४ ] भावे प्रयोगो यथा—कृष्णेन स्थीयते ।
[ ५ ] द्विकर्मकप्रयोगो यथा—धरामन्नं दुदोह ।

( इति प्रयोगविधिः । )

## अथ समासविधिः कथ्यते—

समासाः षड्विधाः । तत्पुरुषः, कर्मधारयो, बहुव्रीहिर्द्विगुर्द्वन्द्वोऽव्ययीभावश्चेति भेदात् ॥

तल्लक्षणानि तु—

पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । उभयपदार्थप्रधानो द्वन्द्वः । अन्यपदार्थप्रधानो बहुव्रीहिः । द्विगु-कर्मधारयौ तत्पुरुषभेदौ ।

समासार्थावबोधकं वाक्यं विग्रह इति ।

[ १ ]

तत्राऽष्टधा तत्पुरुषक्रमः । प्रथमातत्पुरुषो, द्वितीयातत्पुरुषस्तृतीयातत्पुरुषश्चतुर्थीतत्पुरुषः,

पञ्चमीतत्पुरुषः, षष्ठीतत्पुरुषः, सप्तमीतत्पुरुषो, नञ्तत्पुरुषश्चेति ।

[ १ ] तत्र प्रथमा–तत्पुरुषो यथा—अर्धं पिप्पल्याः अर्धपिप्पली । पूर्वं कायस्येति पूर्वकायः ।

[ २ ] द्वितीयातत्पुरुषो यथा–कृष्णं[1] श्रितः कृष्णश्रितः । ग्रामं गतो ग्रामगतः । कान्तारमतीतः कान्तारातीतः ।

[ ३ ] तृतीयातत्पुरुषो यथा–शंकुलया[2] खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । मासेन[3] पूर्वो मासपूर्वः ।

[ ४ ] चतुर्थीतत्पुरुषो यथा–यूपाय[4] दारु यूपदारु । कुण्डलाय हिरण्यं कुण्डलहिरण्यम् । गुरवे दक्षिणा गुरुदक्षिणा ।

[ ५ ] पञ्चमीतत्पुरुषो यथा–अर्थात्[5] अपेतः अर्थापेतः । सिंहात्[6]

---

१ कृष्णश्रितो ग्रामगतः कान्तारातीत इमानि ( द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ) अस्य सूत्रस्योदाहरणानि बोध्यानि ।

२ शङ्कुलाखण्डो धान्यार्थ इमे द्वे । ( तृतीया तत्कृतार्थेन गुणवचनेन ) । अस्योदाहरणे बोध्ये ।

३ मासपूर्व इति । (पूर्वसदृश-समोनार्थ-कलह निपुण-मिश्र-श्लक्ष्णैः) । अस्योदाहरणं बोध्यम् ।

४ यूपदारु इत्यादि । ( चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ) अस्योदाहरणं बोध्यम्।

५ अर्थापेत इति । ( अपेताऽपोढमुक्तपतिताऽपत्रस्तैरल्पशः ) अस्योदाहरणम् ।

६ सिंहभयमिति । ( पञ्चमी भयेन ) इत्यस्योदाहरणम् ।

भयं सिंहभयम् । वृश्चिकात् भीः वृश्चिकभीः ।[1]

[ ६ ] षष्ठीतत्पुरुषो यथा–कृष्णस्य भक्तः कृष्णभक्तः ।[2] आम्रस्य फलम् आम्रफलम् । राज्ञः पुरुषो राजपुरुषः ।

[ ७ ] सप्तमीतत्पुरुषो यथा—अक्षेषु शौण्डः अक्षशौण्डः ।[3] कर्मणि कुशलः कर्मकुशलः । विद्यायां निपुणः विद्यानिपुणः ।

[ ८ ] नञ्तत्पुरुषो यथा—न ब्राह्मणः अब्राह्मणः । न वृषभः अवृषभः । पापाभावः अपापम् । धर्मविरुद्धोऽधर्मः ।

इति तत्पुरुषः ।

## [ २ ] अथ कर्मधारयः कथ्यते—

स च विशेषणपूर्वपदो विशेष्यपूर्वपदो विशेषणोभयपद उपमानपूर्वपद उपमानोत्तरपदः सम्भावनापूर्वपदोऽवधारणापूर्वपदश्चेति भेदात् सप्तविधः ।

[ १ ] तत्र विशेषणपूर्वपदः कर्मधारयो यथा—कृष्णश्चाऽसौ सर्पश्च कृष्णसर्पः । कृष्णौ च तौ सर्पौ च कृष्णसर्पौ । कृष्णाश्च ते सर्पाश्च कृष्णसर्पाः । रक्ता चासौ लता च रक्त-

---

१ वृश्चिकभीरिति [ भयभीतभीतिभीरि ] तिवार्तिकस्योदाहरणम् ।

२ कृष्णभक्त इत्यादित्रिकम् । ( षष्ठी ) इति सूत्रोदाहरणम् ।

३–अक्षशौण्ड इत्यादित्रिकम् । [ सप्तमीशौण्डैः ] इति सूत्रोदाहरणम् ।

लता । रक्ते च ते लते च रक्तलते । रक्ताश्च ताः लताश्च रक्तलताः । नीलं च तत् उत्पलं च नीलोत्पलम् । नीले च ते उत्पले च नीलोत्पले । नीलानि च तानि उत्पलानि च नीलोत्पलानि ।

[ २ ] विशेष्यपूर्वपदः कर्मधारयो यथा—वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः ॥ गोपालश्चासौ बालश्च गोपालबालः ।

[ ३ ] विशेषणोभयपदः कर्मधारयो यथा—शीतं च तत् उष्णं च शीतोष्णम् ।

[ ४ ] उपमानपूर्वपदः कर्मधारयो यथा—मेघ इव श्यामो मेघश्यामः । कम्बुवत् ग्रीवा कम्बुग्रीवा । चन्द्रवत् मुखं चन्द्रमुखम् ।

[ ५ ] उपमानोत्तरपदः कर्मधारयो यथा—पुरुषः व्याघ्र इव पुरुषव्याघ्रः । नरः सिंह इव नरसिंहः ।

[ ६ ] सम्भावनापूर्वपदः कर्मधारयो यथा—गुण इति बुद्धिः गुणबुद्धिः ।

[ ७ ] अवधारणापूर्वपदः कर्मधारयो यथा—विद्यैव धनं विद्याधनम् ॥ अविद्यैव शृङ्खला अविद्याशृंखला ।

मध्यमपदलोपी समासो यथा—शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणः देवब्राह्मणः ।

इति कर्मधारयः ।

[ ३ ] अथ बहुव्रीहिः कथ्यते—

स च द्विपदो, बहुपदः, सहपूर्वपदः, संख्योत्तरपदः, संख्योभयपदो, व्यतिहारलक्षणो, दिगन्तराललक्षणश्चेति भेदात् सप्तविधः।

[ १ ] तत्र द्विपदबहुव्रीहिर्यथा–चित्राः गावो यस्य सः चित्रगुः गोपः। प्राप्तम् उदकं यं सः प्राप्तोदको ग्रामः। भुक्तम् ओदनं येन सः भुक्तौदनो नृपः। निर्जितः कामो येन सः निर्जितकामः शिवः। विभक्तं धनं यैस्ते विभक्तधना बन्धव। दत्तः सूपो यस्मै सः दत्तसूपो ब्राह्मणः। उद्धृतं धनं यस्मात्तत् उद्धृतधनं कुण्डलम्। चक्रं पाणौ यस्य सः चक्रपाणिः हरिः। करे स्थितं धनं यस्य सः करस्थितधनो वणिक्। पुष्पिताः द्रुमाः यस्मिन् सः पुष्पितद्रुम आरामः। बहवो यज्वानो यस्यां सा बहुयज्वा शाला। पुष्पिताः द्रुमाः यस्मिन् तत पुष्पितद्रुमं वनम्। खरस्य मुखमिव मुखं यस्य सः खरमुखस्तुरगः। उष्ट्रस्य मुखमिव मुखं यस्य सः उष्ट्रमुखो यक्षः। उच्चैर्घटो यस्याः सा उच्चैर्घटा नारी। अङ्ग-गात्रोदर-स्तन-कण्ठो-ष्ठ-दन्त-मुखा-ऽक्षि-केशाः स्त्रियां बहुव्रीहौ ईबन्ता भवन्ति। ते च यथा—सुन्दरं अङ्गं यस्याः सा सुन्दराङ्गी। शोभनं गात्रं यस्याः सा सुगात्री। कृशम् उदरम् यस्याः सा कृशोदरी। चारू

स्तनौ यस्याः सा चारुस्तनी। इन्दीवरे इव अक्षिणी यस्याः सा इन्दीवराक्षी। कम्बुरिव कण्ठो यस्याः सा कम्बुकण्ठी। कुटिलाः केशा यस्याः सा कुटिलकेशी।

इतरेषां अङ्गादिवाचकानाम् स्त्रीत्वेऽपि आबन्तत्वमेव। यथा—चारुदेहा विस्तृतालका आवृतकुचा कुन्ददशनेत्यादि।

उरु-पृथु-लघु-बहु-पटु-ऋजु-स्वादु-चारु-मृदुशब्दानां स्त्रीलिङ्ग-विशेषणत्वे ईबन्तत्वमपि। यथा—मृद्वी शाटी लघ्वी भाषेत्यादि। इति द्विपदबहुव्रीहिः।

[ २ ] बहुपदो यथा—अधिकः उन्नतः अंसो यस्य सः अधिकोन्नतांसः।

[ ३ ] सहपूर्वपदो यथा—सह कृष्णेन वर्तत इति सकृष्णः। सह पुत्रेणेति सपुत्रः। रामेण सह वर्तत इति सरामः।

[ ४ ] संख्योत्तरपदो यथा—दशानां समीपे ये सन्ति ते उपदशाः।

[ ५ ] संख्योभयपदो यथा—द्वौ वा त्रयो वा द्वित्राः।

[ ६ ] व्यतिहारलक्षणो यथा—केशेषु केशेषु गृहीत्वा इदम् युद्धम् प्रवर्तत इति केशाकेशि युद्धम्। दण्डै दण्डैः कृत्वा इदम् युद्धम् प्रवर्तत इति दण्डादण्डि।

[ ७ ] दिगन्तराललक्षणो यथा—दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालम् सा दक्षिणपूर्वा।

इति बहुव्रीहिः।

## [ ४ ] अथ द्विगुः ।

द्विगुसमासो द्विविधः। एकवद्भावी, अनेकवद्भावी चेत् ।

[ १ ] एकवद्भावी द्विगुर्यथा—त्रयाणां शृङ्गाणां समाहारस्त्रिशृङ्गम् ।
पञ्चानां फलानां समाहारः पञ्चफली ।

[ २ ] अनेकवद्भावी द्विगुर्यथा—सप्त च ते ऋषयश्च सप्तर्षयः ।

इति द्विगुः ।

## [ ५ ] अथ द्वन्द्वः ।

द्वन्द्वोऽपि द्विविधः । इतरेतर-समाहारभेदात् ।

[ १ ] इतरेतरद्वन्द्वो यथा—प्लक्षश्च न्यग्रोधश्च प्लक्ष-न्यग्रोधौ ।
रामश्च कृष्णश्च रामकृष्णौ ।

[ २ ] समाहारद्वन्द्वो यथा—हरिश्च हरश्च गुरुश्च एषां समाहारः हरि-हर-गुरुः ।

प्राणितूर्यसेनाङ्गानां द्वन्द्वैकवद्भावः । प्राण्यङ्गे यथा—पाणी च पादौ च मुखं च पाणि-पाद-मुखम् ।

तूर्याङ्गे यथा—मार्दङ्गिकश्च वैणविकश्च मार्दङ्गिक-वैणविकम् । शंखश्च पटहश्च शंखपटहम् ।

सेनाङ्गे यथा—राजन्याश्च रथाश्च अश्वाश्च राजन्यरथाश्वम् ।

इति द्वन्द्वः ।

## [ ६ ] अथाऽव्ययीभावः ।

स यथा—तटं तटं प्रत्यनुतटम् । गिरिं गिरिं प्रत्यनुगिरिम् । क्रममनतिक्रम्य वर्तत इति यथाक्रमम् । वेलायामित्यधिवेलम् । कुम्भस्य समीपे वर्तत इत्युपकुम्भम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्य अत्ययः अतिहिमम् ।

अव्ययीभावस्याऽव्ययत्वात् त्रिषु लिङ्गेषु समानं रूपम् ।

इति षट्समासा निर्णीताः ।

### अथ अलुक्समासो लुक्समासश्च ।

[ १ ] लुक्समासो यथा—तनुरेव लता तनुलता । कृष्णा एव मेघाः कृष्णमेघाः ।

[ २ ] अलुक्समासो यथा—वने चरतीति वनेचरः । पङ्के रुहतीति पङ्केरुहम् ।

मत्वर्थीयो यथा—बुद्धिरस्यास्तीति बुद्धिमान् । धनमस्यास्तीति धनवान् । धीरस्य भावो धीरता । जनानां समूहो जनता । घटस्य भावो घटत्वम् ।

वृक्षशाखा तत्पुरुषः श्वेताश्वः कर्मधारयः ॥
रक्तवस्त्रो बहुव्रीहिर्द्वन्द्वश्चन्द्र-दिवाकरौ ॥१॥

यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य ॥
तल्लिङ्गं तद्वचनं सैव विभक्तिर्विशेषणस्यापि ॥२॥
सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥३॥
आदौ कर्तृपदं वाच्यं द्वितीयादिपदं ततः ॥
क्त्वातुमुँल्ल्यप् च मध्ये तु कुर्यादन्ते क्रियापदम् ।४।

अथ कारकमुच्यते ।

कर्ता[1] कर्म[2] च करणं[3] सम्प्रदानं[4] तथैव च ।
अपादान[5]ाधिकरण[6]मित्याहुः कारकाणि षट् ॥५॥
निर्देशे प्रथमा प्रोक्ता सैव चामन्त्रणेष्वपि ।
द्वितीया कर्मणि प्रोक्ता तृतीया कर्तृ-करणयोः ।६।
ज्ञानज्ञाप्येऽङ्गविकारे हेतावपि च इष्यते ।
तादर्थ्ये सम्प्रदाने च चतुर्थी स्याच्च सर्वदा ॥७॥

---

१ व्यापाराश्रयः कर्ता ।
२ फलाश्रयः कर्म ।
३ यद्व्यापाराव्यवधानेन कार्यनिष्पत्तिस्तत्करणम् ।
४ सम्यक् प्रदीयतेऽस्मै तत्सम्प्रदानम् ।
५ विभागजनकव्यापारे ध्रुवं यत्तदपादानम् ।
६ अधिक्रियतेऽस्मिन्नित्यधिकरणम् आधारः ।

हेत्वपादानयोः पञ्चमी षष्ठी तु कर्तृकर्मसम्बन्धे।
अधिकरणनिमित्तसत्त्वे सप्तमी स्याच्च विषयेऽपि
यदा कर्तरि प्रथमा स्यात् कर्मणि द्वितीया तदा।
यदा कर्तरि तृतीया स्यात् कर्मणि प्रथमा तदा॥९॥
विशेषणं पुरस्कृत्य विशेष्यं तदनन्तरम्।
कर्तृकर्मक्रियायुक्तमेतदन्वयलक्षणम्॥ १० ॥

प्रथमान्तस्तृतीयान्तः षष्ठ्यन्तः कर्ता। द्वितीयान्तं षष्ठ्यन्तं कर्म। तृतीयान्तं करणम्। चतुर्थ्यन्तं सम्प्रदानम्। पञ्चम्यन्तमपादानम् षष्ठ्यर्थः सम्बन्धः। सप्तम्यन्तमधिकरणम्

इति कारकाणि।

❁ इति समासचक्रम् समाप्तम् ❁

---

# ❀ परीक्षोपयोगिपुस्तकानि ❀

| | |
|---|---|
| अध्यात्मभागवतसंग्रह—भाषा टीका | २) |
| अन्योक्तिसाहस्री—मूल | ॥=) |
| काव्यादर्श—भाषा टीका | १॥) |
| चाणक्यनीतिदर्पण—भाषा टीका | ।।।) |
| जातकमाला—सटीक | २।) |
| देवीभागवत—भाषा टीका | ५०) |
| नीतिशतक—सं० टी०, भा० टी० | १) |
| नैषधीयचरित—भाषा टीका | ८) |
| पराशरस्मृति—भाषा टीका | १॥) |
| पारिजातकावलि—सं० टी०, भा० टी० | २।) |
| प्रसन्नराघव नाटक—सं० टी०, भा० टी० | ३) |
| मनुस्मृति—द्वितीयाध्याय, सं० टी०, भा० टी० | ।।।) |
| यज्ञमीमांसा— | २॥) |
| रूपप्रभा— | ३॥) |
| विदुलोपाख्यान—सं० टी०, भा० टी० | १) |
| शान्तिमयूख—मूल | २॥) |
| सुगमज्यौतिष—भाषा टीका | १०) |
| स्तुतिकुसुमाञ्जलि—भाषा टीका | ८) |
| हर्षचरित—प्रथम उच्छ्वास, सं० टी०, भा० टी० | १।) |

पुस्तकप्राप्तिस्थान—

मास्टर खेलाड़ीलाल ऐण्ड सन्स

कचौड़ीगली, बनारस–१